न 'गोचरः' गवां चारिस्थानं नैव च गवां यत्र पानं न वा यत्रोपस्थाने गावो दुह्यन्ते किन्तु व्रजिकाया अभ्यासे गवादिभिर्यत्र क्षुण्णं आदिशब्दाद् गन्त्रीभिश्च यावदाक्रान्तं तावानवग्रहः 'शेषं तु' गोचरादिस्थानं सर्वमप्यनवग्रहः ॥ ४८६१ ॥

**जइ समगं दो वइगा, ठिता तु साधारणं ततो खेत्तं ।**
5 **अण्णवइगाएँ सहिता, तत्थेवऽण्णो ठिता अपभू ॥ ४८६२ ॥**

यदि समकमेकस्यां व्रजिकायां द्वौ गच्छौ स्थितौ ततः साधारणं तत् क्षेत्रम् । अथ काचिद् व्रजिका पूर्वं साधुभिरवगृहीता तत्रान्ये साधवो अन्यया व्रजिकया सहिताः पश्चादागताः तत्रैव व्रजिकायां स्थितास्तदा ते पश्चादागता अप्रभवः, पूर्वस्थिता एव स्वामिन इति ॥ ४८६२ ॥

**अन्नोन्नं णीसाए, ठिताण साहारणं तु दोण्हं पि ।**
10 **णीसट्ठिताएँ अपभू, तत्थ व अण्णत्थ व वसंता ॥ ४८६३ ॥**

अथ पूर्वस्थिताः पश्चादागताश्च 'अन्योन्यं' परस्परं निश्रया स्थितास्ततस्तेषां द्वयेषामपि साधारणं क्षेत्रम् । अथ पूर्वस्या व्रजिकाया निश्रया स्थितायामागन्तुकव्रजिकायां ये साधवो वर्तन्ते ते तत्र वाऽन्यत्र वा वसन्तोऽवग्रहस्य 'अप्रभवः' न स्वामिनः ॥ ४८६३ ॥

अथ किमर्थमन्यस्या व्रजिकाया निश्रां सा व्रजिका प्रतिपद्यते ? उच्यते—

15 **दुग्गट्ठिए वीरअहिट्ठिए वा, कते णिवाणे व ठिएहिँ पुव्वं ।**
**भएण तोयस्स व कारणेणं, ठायंतगाणं खलु होइ णिस्सा ॥ ४८६४ ॥**

'दुर्गे स्थिताः' स्तेन-परचक्राद्यगम्ये स्थाने स्थिता साऽन्या व्रजिका, यद्वा वीरेण स्वामिना सा अधिष्ठिता, अथवा तैः 'पूर्वं स्थितैः' प्रथमव्रजिकासम्बन्धिभिर्गोकुलिकैस्तत्र 'निपानं' जलपानस्थानं कृतमस्ति, ततो भयेन तोयस्य वा कारणेन तस्यां व्रजिकायां तिष्ठतामपरेषां गोकुलि-
20 कानां निश्रा भवति ॥ ४८६४ ॥ एवमागन्तुका व्रजिका येन कारणेन पूर्वस्या निश्रां प्रतिपद्यते तदभिहितम् । अथागन्तुकाया निश्रां यथा पूर्वा प्रतिपद्यते तथा दर्शयति—

**भयसा उट्ठेतुमणा, वइगा अण्णा य तत्थ जइ एज्जा ।**
**पच्छापत्ते निस्सा, जे पुव्वठिया ण ते पभुणो ॥ ४८६५ ॥**

काचिद् व्रजिका भयेन 'उत्थातुमनाः' प्रचलितुकामा, 'अन्या च' नवा व्रजिका यदि तत्रा-
25 गच्छेत्, सा च बलवता परिगृहीता, ततः पश्चात्प्राप्ताया अपि तस्या निश्रां पूर्वा प्रतिपद्यते, ततो ये पूर्वस्थिताः साधवस्तेऽवग्रहस्य न प्रभवः किन्तु पश्चात्प्राप्ता इति ॥ ४८६५ ॥

अथ व्रजिकाया एव प्रकारान्तरमाह—

**वइगाएँ उट्ठियाए, अच्छंते अहव होज्ज गेलन्नं ।**
**अन्ने तत्थ पविट्ठा, तम्मि व अण्णम्मि वा तूहे ॥ ४८६६ ॥**

30 यस्यां व्रजिकायां साधवः स्थिता सा उत्थिता अन्या च तत्रागन्तुकामा तैः श्रुता तत उत्थितायामपि व्रजिकायां तिष्ठताम् अथवा ग्लानत्वं कस्यापि साधोर्भवेत् ततस्तत्रैव स्थितानामन्ये गोकुलिकाः साधुभिः सहिताः 'तत्र' प्राचीनव्रजिकास्थाने प्रविष्टास्ते च तत्र वा "तूहे" तीर्थे

१ वा अन्यत्र वा तीर्थे गाः पानीयं पाययेयुः ततोऽत्रा° मो० ॥

गाः पानीयं पाययेयुः अन्यत्र वा ततोऽत्रावग्रहमार्गणा क्रियते ॥ ४८६६ ॥

**जइ वा कुडी-पडालिसु, पुव्विल्लकतासु ते ठिता संता ।**
**अण्णम्मि वि पजेंता, तूहे अस्सामिणो होंति ॥ ४८६७ ॥**

वाशब्दः प्रकारान्तरद्योतकः । यदि 'ते' आगन्तुका गोकुलिकाः पूर्वगोकुलिककृतासु कुटी-पडालिकासु स्थितास्ततोऽन्यस्मिन्नपि तीर्थे गाः पाययन्तोऽस्वामिनो भवन्ति । ततो यदि ते 5 पूर्वस्थिताः साधवो निष्कारणिका तदा न प्रभवः । अथ ग्लानादिकारणेन स्थितास्तदा ते स्वामिनः, नागन्तुकाः तत्रावग्रहस्य प्रभवः ॥ ४८६७ ॥

**अन्नत्थ वा वि ठाउं, पाइंति कइल्लए जइ निवाणे ।**
**ते खलु ण होंति पहुणो, सभावतूहे पहू हुंति ॥ ४८६८ ॥**

यद्वा पूर्वकृताः कुटी-पडालिका वर्जयित्वाऽन्यत्र स्थाने स्थित्वा आगन्तुका गोकुलिका यदि 10 पूर्वैः कृते निपाने गाः पाययन्ति तदा 'ते खलु' आगन्तुकाः साधवो न प्रभवो भवन्ति । यदि तु 'स्वभावतीर्थे' स्वाभाविके निपाने पाययन्ति तदा आगन्तुकाः साधवः प्रभव इति ॥४८६८॥

**एमेव मासकप्पे, अतीरिए उट्ठियाएँ पत्तियरा ।**
**पुव्विल्ला हुंति पहू, पुण्णे हट्ठा य न लहंति ॥ ४८६९ ॥**

एवमेव 'अतीरिते' असम्पूर्णे मासकल्पे उत्थितायां पूर्वव्रजिकायाम् इतरा व्रजिका तत्र 15 प्राप्ता ततः पूर्वसाधव एव प्रभवः । अथ मासकल्पः पूर्णस्ते च 'हृष्टाः' अग्लाना अपि तत्रैव स्थितास्ततो नावग्रहं लभन्ते, पश्चात्प्राप्ता एव तत्र प्रभव इति ॥ ४८६९ ॥

**फासुग गोयरभूमी, उच्चारे चेव छण्ण वसही य ।**
**हट्ठा वि लभंतेवं, तदभावे पच्छ जे पत्ता ॥ ४८७० ॥**

अथ तत्र प्राशुका गोचरभूमिरुच्चारभूमिश्च विद्यते, वसतिश्च छन्ना प्राप्यते, अन्यत्र च 20 तथाविधा नास्ति ततो हृष्टा अपि 'एवम्' अनन्तरोक्तयुक्त्या लभन्ते । 'तदभावे' अनन्तरोक्त-कारणाभावे ये पश्चात् प्राप्तास्त एव लभन्ते ॥ ४८७० ॥

गतं व्रजिकाद्वारम् । अथ सार्थद्वारमाह—

**जेणोग्गहिओ सत्थो, जेण य सत्थाहो समग दोण्हं पि ।**
**जावइया पडिसत्था, पुव्वठिय साहारणं जं च ॥ ४७७१ ॥** 25

'येन' साधुना सार्थः पूर्वमवगृहीतो यन वा सार्थवाहः पूर्वमनुज्ञापितस्तस्यावग्रह आभवति । अथ समकमनुज्ञापितस्ततो द्वयोरप्यवग्रहः । यावन्तश्च 'प्रतिसार्थाः' मौलसार्थाद् लघुतरास्तत्र समागत्य मिलन्ति तेषु ये साधवस्ते पूर्वस्थितानामुपसम्पन्ना भवन्ति । यत्र परस्परं निश्रया द्वौ सार्थौ तिष्ठतस्तत्र साधारणं मन्तव्यमिति ॥ ४८७१ ॥ एतदेव स्पष्टयति—

**सत्थे अहप्पधाणा, एक्केणेक्केण सत्थवाहो उ ।** 30
**आपुच्छिया विदिण्णे, दोण्ह वि मिलिया व एगट्ठा ॥ ४८७२ ॥**

सार्थे ये केचिद् यथाप्रधानाः पुरुषास्ते एकेनानुज्ञापिताः, एकेन तु साधुना सार्थवाह

१ यत्र प° भा० कां० ॥

आपृष्टः, ताभ्यां चोभयोरपि वितीर्णम्—अनुज्ञापितं ततो येन कृतं नातिक्रम्यते तेन यस्मै प्रदत्तं तस्यावग्रहः । अथ द्वावप्यनतिक्रमणीयौ ततो द्वयोरपि साधारणं क्षेत्रम् । अथ द्वावप्येकत्र मिलितावनुज्ञापितौ ततो येन पूर्वमनुज्ञापितस्तस्यावग्रह इति ॥ ४८७२ ॥

इंतं महल्लसत्थं, डहरागो पडिच्छए ण ते पभुणो ।
5 तुरियं वा आधावति, भएण एमेव अस्सामी ॥ ४८७३ ॥

महल्लं—बृहत्तरं कमपि सार्थमागच्छन्तं 'डहरकः' लघुतरः सार्थः प्रतीक्षते ततो ये लघुतरसार्थवासिनः साधवस्ते नावग्रहस्य प्रभवः । यो वा सार्थो भयेन त्वरितं बृहत्तरसार्थमिलनायाधावति तत्रापि ये साधवस्ते 'एवमेव' अस्वामिनः, बृहत्तरसार्थवासिन एवावग्रहस्य स्वामिन इति भावः ॥ ४८७३ ॥

10 अडवीमज्झम्मि णदी, दुग्गं वा एत्थ दो वि वसिऊणं ।
बोलेहामो पभाए, णिस्सा साधारणं कुणइ ॥ ४८७४ ॥

द्वौ सार्थावेकत्र मिलितौ परस्परमित्थं निश्रां कुरुतः, यथा—यदिदमटवीमध्ये नदी दुर्गं वा विद्यते अत्र द्वयेऽपि जना रात्रावुषित्वा प्रभाते 'बोलयिष्यामः' पुरतो गमिष्यामः इति परस्परसाधारणां निश्रां यत्र कुरुतस्तत्र सचित्तादिकं सर्वमपि साधारणम् ॥ ४८७४ ॥

15 गतं सार्थद्वारम् । अथ सेनाद्वारमाह—

सेणाएँ जत्थ राया, अणोग्गहो जत्थ वा पविट्ठो सो ।
सेसम्मि उग्गहो जो, गमो उ वइगाएँ सो इहइं ॥ ४८७५ ॥

'यत्र' यस्यां सेनायां राजा भवति तत्रावग्रहो न भवति । 'यत्र वा' ग्रामादौ क्षेत्रे 'सः' राजा प्रविष्टस्तत्र यद्यप्यन्ये साधवः पूर्वस्थिताः सन्ति तथापि यावन्तं कालं स तत्रास्ते तावन्ना-
20 वग्रहः । शेषं नाम—यत्र ग्रामादौ राजा न प्रविष्टो या वा मुण्डसेना अराजका इत्यर्थः तत्रावग्रहो भवति परं तत्र यो व्रजिकायां गम उक्तः स इहापि मन्तव्यः ॥ ४८७५ ॥

गतं सेनाद्वारम् । अथ संवर्त्तद्वारमाह—

नागरगो संवट्टो, अणोग्गहो जत्थ वा पविट्ठो सो ।
सेसम्मि उग्गहो जो, गमो उ सत्थम्मि सो इहइं ॥ ४८७६ ॥

25 'नागरकः' नगरसम्बन्धी संवर्त्तः 'अनवग्रहः' न तत्रावग्रहो भवति । 'यत्र वा' ग्रामादौ स नागरकः संवर्त्तः प्रविष्टस्तत्रापि नावग्रहः । शेषः—ग्रामेयकसंवर्त्तस्तत्रावग्रहो भवति परं य एव सार्थे गम उक्तः स एवेह द्रष्टव्यः ॥ ४८७६ ॥

॥ इति कल्पाध्ययनटीकायां तृतीय उद्देशकः परिसमाप्तः ॥

॥ ग्रन्थाग्रम्[1]—३३८२५ ॥

30 चूर्णीवचोभिः फलकैः सुयोजितैर्गुरुप्रतिष्ठानयुतैः ससूत्रकैः ।
तृतीयकोद्देशकवारिधिं सतां, तरी तरीतुं विवृतिः कृता मया ॥

---

१ ग्रन्थाग्रम्—२५०७ भा० । ग्रन्थाग्रम्—८६०६ कां० । ग्रन्थाग्रम्—३१०० डे० ॥
२ °तिष्ठैर्दृढसूत्रगुम्फितैः । तृती° भा० ॥